SRI SHIVABHYAM NAMAHA

# JAIMINEYA NYAYAMALA

(WITH VISTARA)

by

SRI MADHAWACHARYA

and

# POORVA MEEMAMSA VISHAYA SANGRAHA DEEPIKA

by

SRIMAD APPAYYA DEEKSHITHA


Edited by

MAYURAM SRI M. RAMANATHA DIKSHITHAR

Dharmajna, Vidya Vachaspathi
Vedanta Siromani, Sama Lakshana
Srautha Smartha Vidwan,
*Recipient of President's Award*



Published by

SRI V. SWAMINATHA IYER, BOMBAY

for

"VIDYARANYA VIDYAPEETAM"

1983

श्री शिवाभ्यां नमः

# जैमिनीयन्यायमाला
# श्रीमाधवाचार्येण विरचिता

## तद्विरचितविस्तराख्यव्याख्यया
## श्रीमदप्पय्यदीक्षितरचितपूर्वमीमांसा-
## विषयसंग्रहदीपिकयाच संवलिता


संपादकः

मायूरम् म. रामनाथदीक्षितः

धर्मज्ञः, विद्यावाचस्पतिः,

भारतराष्ट्रपतिसंमानितश्च



प्रकाशयिता

स्वामिशैलाभिजनः वि. स्वामिनाथार्यः

बम्बाई

विद्यारण्यविद्यापीठार्थं मुद्रापिता

विजयते

१९८३

श्रीशिवाभ्यां नमः

# भूमिका

मरकतवल्याश्लिष्टं मार्गसहायाख्यकल्पतरूमीडे ।
योऽस्मद्देशिकमुखततः शास्त्रार्थग्रथनपाटवंदत्ते ।।
पुराणन्यायमीमांसा धर्मशास्त्रांगमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्यच चतुर्दश ।।

इति याज्ञवल्क्यस्मरणात् धर्मस्वरूपस्य, तत्वावबोधस्य च निर्णयः सांगोपांगवेदैरेव निष्पद्यत इति ज्ञायते। अतः अवश्यविज्ञेयाः वेदार्थाः पुरूषार्थमभिलषद्भिः ।

एतेषां दुरवगाहत्वान्महोदधेरिव काचन नौरपेक्ष्यते तितीर्षताम् । तादृशनौस्थानीयो विद्यारण्यमहामुनिः। यतः चतुर्ष्वपि वेदेषु मन्त्राणां ऐतरेय ताण्डयादिब्राह्मणानां च भाष्यमारचयामास, धर्मसारसंग्रहभूतायाः विशिष्यकलियुगधर्मावेदिकायाः पराशरस्मृतेः विशदतया व्याख्यामकरोत्, पुराणतल्लजस्य सूतसंहिताग्रंथस्य तात्पर्यटीकांच, रचयामास, अंगानांच ज्योतिषादीनां कालमाधवादिसंग्रहकर्ता, पूर्वोत्तरमीमांसयोः दुरवगममपि पदार्थजातं अधिकरणन्यायमालाविस्तराभ्यां विस्पष्टमबोधयत् ।

श्रीविद्यारण्यस्वामिनां कालदेशादिवृत्तान्तमधिकृत्य वर्ण्यते बहुभिः बहुप्रकारम्। तत्र मद्दृष्टिगोचरं यत् तदुपनिधीयते विदुषां पुरतः— कालः— ताम्रपत्रलेखे एवंदृश्यते, १३१३ शके प्रजापतिनाम्निवत्सरे वैशाखामायां सूर्योपरागपुण्यकाले कुच्चरसंज्ञकस्य ग्रामस्य स्वनाम्ना माधवपुरमिति नामविधाय चतुर्विशतिसंख्याकेभ्यः विप्रवर्येभ्यः उदकपूर्वमदात्इति। अतो ज्ञायते त्रयोदशशतकस्य चतुर्थचरणे आविरभूत् इति।"

कर्नाटकदेशे तुंगभद्रातीरे पंपानामक सरः क्षेत्रंच विद्यते, तस्य विजयनगरमिति प्रथा। सैव किष्किन्धेति ज्ञायते। यत्र शंभुः विरूपाक्षाख्यया विभाति। तद्राज्यधुंरधरः श्री बुक्क भूपतिः। तस्यामात्यवर्यः माधवाचार्यः। माधवस्य पिता मायणः जननी श्रीमती, सायणः सोमनाथः (भोगनाथः), इति भ्रातरौ। बोधायनसूत्रः, यजुश्शाखीयः भारद्वाजगोत्रश्च। बुक्क नृपतेः, तत्पुत्रस्य हरिहराख्यस्यचामात्यवरः आसी-

दितिज्ञायते, एवं अथर्ववेदार्थप्रकाशसमाप्तौ हरिहरनामोल्लेखात्। तदानीं राज्यनिर्वाह कौशलं अवाङ्मनस गोचरमासीत्। एवं ऐहिकं राज्य-सुखमनुभूय, आमुष्मिकं स्वाराज्यानंदं अनुभवितुकामः पारिव्राज्याश्रम-माससाद। यत्र विद्यारण्यतीर्थ इति अभिधा प्रथिता। तदा श्रृंगगिरि शारदापीठाधीशः संजातः। तत्र गुरवः शंकरानन्द स्वामिनः। अतः 'नमः श्रीशंकरानन्दगुरू पादांबुजन्मने' इति पचंदश्यादिषु ग्रन्थेषु गुरू नामोल्-लेखः कृतः। एते माधवाचार्य विद्यारण्यस्वामि सायण इति प्रथित नामानः (सायण इति वंश नाम) सर्वेष्वपि दर्शनेषु अकुण्ठितधिषणाः सर्वज्ञकल्पाश्च विरेजुः। तद्रचितग्रंथाः ऋग्यजुस्सामाथर्वभाष्याणि मंत्र ब्राह्मणोभयात्मकानि, पराशरस्मृतिव्याख्या, जैमिनीय, वैयासिक न्याय-माला सविस्तरा, सर्वदर्शनसंग्रहः, अनुभूतिप्रकाशः, दशोपनिषत्दीपिका, सूतसंहिता टीका, पञ्चदशी जीवन्मुक्ति—विवेकः अपरोक्षानुभूतिटीका, माधव वृत्तिः, कालमाधवीयं इत्यादयः अन्येपि स्युः।

एवं प्रसंगतः प्रकृतग्रन्थकर्तृविषयः प्रस्तावः परिसमाप्तः ॥

ग्रंथ विषयः प्रस्तूयते। परब्रह्मणो निश्वास भूतोवेदः कर्मब्रह्मोभया-वेदकः चक्षुरिव द्विजानां, वेदश्चक्षुर्द्विजातीनामिति स्मृतेः॥ तत्र ब्रह्म-विषयो विचारः शारीरक मीमांसासत्रात्मकः वेदव्याचार्येण कृतः कर्म-काण्डार्थनिर्णयाय भगवान्जैमिनिः सूत्राणि रचयामास तदेव मीमांसा शास्त्रमिति प्रथितम् तस्यैव तन्त्रं, शास्त्रं इत्यादयः पर्यायशब्दाः। तत्र २७४५ सूत्राणि, ९०७ अधिकरणानिच विद्यन्ते। तस्य भाष्यकर्ता, शबरस्वामी, वृत्तिकृत्भगवानुपवर्षः वार्तिककारः कुमरिलभट्टः शास्त्र-दीपिका पार्थसारथि मिश्रकृता।

एवं विस्तृतं सागरतां नीतं शास्त्रं संपिण्डितार्थतया करतलामलकवत् अनायासेन अवबोद्धुं श्लोकसहस्रद्वितयेनैव जैमिनीय न्यायमालाख्यं ग्रन्थ-मारचयामास माधवाचार्यः। अत्र विषयविशयपूर्वोत्तरपक्षांगचतुष्टयस-हितोऽधिकरणार्थः श्लोकद्वयैनैव प्रायशः प्रदर्शितः संगतिस्तु स्वयमेवोह्या। अत्रत्याध्यायानां पादानां अधिकरणानांच संख्या पट्टिकया प्रदर्शिता। अस्य ग्रन्थरत्नस्य मुद्रणं यूरोप्देशे, कल्कत्ता नगरे, पूना आनंदाश्रम मुद्रणालयेच संजातमिति ज्ञायते। द्वित्रग्रन्थसाहाय्येन यथा शेमुषीविलासं परिशोध्य विषयानुक्रमणिकामारच्य संयोज्य भूमिकया सनाथं प्राकाश्यं नीयते।

# भूमिका

अनेन साकं श्रीमदप्पय्य दीक्षितेन्द्रकृत पूर्वमीमांसा विषयसंग्रह-दीपिकाच संयोजिता। शोधनादिषु पुरुषमतिसाधारणोदोषः यदि स्यात् परिशील्य निवेदनीयमिति प्रार्थ्यते पण्डितपरिषत्। अस्य ग्रन्थ वरस्य समग्र द्रविण दानेन प्रकाशनिदान भूतस्य स्वामि शैलाभिजन स्वामि-नाथार्यस्य सर्वविधमनोरथपूर्तिः आयुराद्यभिवृद्धिश्च आचार्यवर्यानुग्रहेण भूयादिति आशासे। एतद्ग्रंथग्रथनविषये सानुग्रहं आज्ञां वितीर्य तत्कौशलं च दत्तवतां श्री श्री कामकोटि पीठाधीश्वराणां सर्वज्ञकल्पानां योगी-श्वराणां चरण नलिनयोः सादरं सहस्रशः प्रणामान् समर्प्य ग्रन्थमिमं अर्पये॥

दुन्दुभिमाघ पूर्णिमा
२८.१.१९८३

इत्थं विदुषां विधेयः
मायूराभिजनः
म. रामनाथ दीक्षितः

३८, नाट्टु मुत्तुकुमरप्प वीथी
चेन्नपुरी-४

## "मीमांसाशास्त्रम्"



सोमकीर्तिसमाभासं मीमांसाशास्त्रमुत्तमम् ।
अक्षसूत्रं दधद्दक्षे सुधापूर्णघटं परे ।।

श्रीः

# ॥ पूर्वमीमांसाविषयसङ्ग्रहदीपिका ॥

## ॥ श्रीमदप्पय्यदीक्षितकृता ॥

[१]"अथातो धर्मजिज्ञासा" इति सूत्रेण प्रमाणस्वरूपसाधनफलैः धर्मस्य विचारं प्रतिज्ञाय प्रथमेऽध्याये तस्मिन् प्रमाणं निरूपितम् । तत्र प्रथमे पादे साक्षाद्धर्मे प्रमाणभूतायाश्चोदनायाः पौरुषेयत्वाद्यप्रामाण्यहेतुशङ्कानिराकरणपूर्वकं तत्र प्रामाण्यमुपपादितम् । द्वितीयपादे अर्थवादमन्त्रयोर्विध्यपेक्षितद्रव्यदेवतादिस्तुत्यानुष्ठेयार्थस्मृतिसमर्पकतया ; तृतीयपादे मन्वाद्याप्तप्रणीतवेदाविरुद्धस्मृत्यादीनां मूलवेदानुमापकतया ; चतुर्थपादे "अग्निहोत्रं जुहोति" "श्येनेनाभिचरन् यजेत" इत्यादिविधिवाक्यगतानामग्निहोत्रादिपदानां नाम्ना कर्मभेदः, नाम्ना धर्मातिदेशः, नाम्ना दूरस्थस्यानुवाद इत्यादिप्रयोजनवत्तया[२] कर्मनामतया[३] च तत्र प्रामाण्यमुपपादितम् ॥

एवं प्रमाणसिद्धस्य धर्मस्य परस्परभिन्नं स्वरूपं द्वितीयाध्याये निरूपितम् । तत्र यजति, ददाति, जुहोति इति चोदनासु यज्यादिधातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदः । "समिधो यजति" "तनूनपातं यजति" इत्यादिविधिषु यजतीति पञ्चकृत्वोऽभ्यासेनाविशेषपुनःश्रुतिरूपेणाभ्यासानां [यागानां] भेदः । "सप्तदश प्राजापत्यान् पशूनालभेत" इत्यत्र द्रव्यदेवतासम्बन्धभेदिन्या सप्तदशसंख्यया तदनुमेययागानां भेदः । "अथैष ज्योतिः" इत्यादिवाक्येषु ज्योतिरादिनामधेयच[४][धेयैः] तन्नामकयागानां प्रकृतज्योतिष्टोमात् भेदः । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्यत्र

१. T adds कर्ममीमासाया
२. G. प्रयोजनवाक्यं
३. G. नामगताया
४. T. ज्योतिरादीना ध्येयैः
५. G Space is left out for writing प्रकृतज्योतिष्टोमात् and adds लिङ्गादिलक्षणं

आमिक्षारूपगुणान्तरावरुद्धे[1] यागे[2] निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागाद्भेदः । प्रकरणान्तरेणानु[3]पादेयगुणसहितासन्निधिलक्षणे न नित्याग्निहोत्रान्मासाग्निहोत्रस्य भेद इत्येवं द्वितीयाध्याये कर्मभेदः सापवादः प्रपञ्चितः ॥

तृतीयाध्याये भिन्नानां[4] कर्मणां श्रुतिलिङ्गादिभिः प्रमाणैः शेषशेषिभावो निरूपितः । तत्र निरपेक्षः शब्दः श्रुतिः । सा च त्रिधा—विधात्री, अभिधात्री, विनियोक्त्री च । लिङादिश्रुतिर्विधात्री । [5]इन्द्रादिश्रुतिरभिधात्री । विनियोक्त्री [6]तु एकप्रत्ययरूपा, एकपदरूपा, [7]विभक्तिरूपा चेति त्रिविधा । तत्राद्या "पशुना यजेत" इति[8] ; सा हि स्वोक्तकरणकारकं प्रति स्वोक्तैकत्वसंख्यायाः शेषत्वमर्पयति । द्वितीया तु यजेतेति पदम् ; तेन प्रत्ययोक्तभावनां प्रति प्रकृत्युक्तयागस्य शेषतोपनीयते । तृतीया च शेषित्वबोधिका शेषत्वबोधिका चेति द्विविधा । "व्रीहीन् प्रोक्षति" इत्यादिषु द्वितीया व्रीह्यादीनां प्रोक्षणादिक्रियां प्रति ईप्सिततमत्वरूपशेषित्वबोधिका[9] । "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इत्यादिषु चतुर्थीश्रुतिः मैत्रावरुणस्य प्रदानक्रियेप्सिततमत्वेन कर्मणाभिप्रेयमाणत्वरूपशेषित्वबोधिका[10] । "अरुणया क्रीणाति" इत्यत्र क्रयभावनां प्रत्यारुण्यस्य, "चात्वालान्मृदमाहरति" इत्याहरणक्रियां प्रति चात्वालस्य[11], "वेद्यां हवींष्यासादयति" इत्यत्र हविरासादनक्रियां प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्यः शेषत्वबोधिकाः । षष्ठी तु क्वचित्[12] "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादौ शेषित्वबोधिका, "यजमानस्य याज्या" इत्यादौ शेषत्वबोधिका च, सम्बन्धमात्रानुशिष्टायाः षष्ठ्या योग्यताद्यनुसारेण उभयथापि पर्यवसानसम्भवात् ॥

---

१. T. गुणावरुद्धे
२. T omits यागे
३. T omits अनु...क्षणेन
४. T omits भिन्नानां
५. G. त्वाश्रुतिः
६. G omits तु
७. T. विभक्तिप्रत्ययरूपा
८. G adds तृतीया
९. T. शेषत्वबोधिका
१०. T. शेषत्वबोधिका
११. T omits क्वचित्
१२. T. इत्यत्र क्रयभावकारणस्य कियां प्रति चोद्याश्वस्य

वस्तुसामर्थ्यं लिङ्गम् । तत् द्विविधम्—शब्दसामर्थ्यम्, अर्थसामर्थ्यं च । तत्र "बर्हिर्देवसदनं दामि" इति[1] मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपात् लिङ्गात् लवनशेषता । [2]"स्वधितिनावद्यति", "स्रुवेणावद्यति", "हस्तेनावद्यति" इत्यवदानसामान्यसाधनत्वेन श्रुतानां स्वधित्यादीनां सामर्थ्यरूपलिङ्गाद्विशिष्य मांसद्रवद्रव्यपुरोडाशावदानेषु शेषता ॥

शेषित्वस्य शेषत्वस्य वा बोधिकया श्रुत्या रहितः पदसमभिव्याहारो वाक्यम् । यथा [3]"ज्योतिष्टोमेन स्वर्गकामो यजेत" "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि[4] । यथा वा "मैत्रावरुणः[5] प्रेष्यति चान्वाह च" इति । न हि [6]यागहोमभावनां प्रति स्वर्गस्य भाव्यत्वेन शेषित्वबोधिका द्वितीयादिश्रुतिः[7] प्रैषानुवचनं प्रति मैत्रावरुणस्य कर्तृत्वेन शेषत्वबोधिका [8]तृतीयादिश्रुतिर्वास्ति । प्रथमा तु प्रातिपदिक[कार्थ]-मात्रेऽनुशिष्टा अतः पदसमभिव्याहाररूपेण वाक्येनात्र शेषशेषिभावबोधः ॥

[9]विधिवाक्यतः कर्तव्यत्वेनावगतस्य केन प्रकारेण कर्तव्यमिति विशिष्याज्ञायमानस्येतिकर्तव्यताकाङ्क्षा प्रकरणम् । तत् द्विविधम्—महाप्रकरणम्, अवान्तरप्रकरणं चेति । तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनाम्, द्वितीयेन प्रयाजादिकं प्रत्यभिक्रमणादीनां च—तत्तत्सम्बन्धिसमाम्नातानां शेषता ॥

[देशसामान्यं] स्थानम् । तत्[10] द्विविधम्—यथासंख्यम्, सन्निधिश्च । तत्राद्येन "दब्धिरस्यदब्धो भूयासम्" इति मन्त्रस्याग्नेयाग्नीषोमीयमन्त्रद्वय[11]मध्याम्नातस्य आग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयाजशेषता ।

१. G adds अत्र
२. T. स्वधितिना...शेषता is read thus.—"स्रुवेणावद्यति" इत्यत्र स्रुवस्य बिलत्वलिङ्गा इवावदानशेषता ॥
३. T omits "ज्योति .... यजेत"
४. T. omits आदि.
५. G. मैत्रावरुणं
६. T. यागभावानां
७. T द्वितीयाश्रुतिः
८. T. तृतीयाश्रुतिः
९. T. भावः बोधकः
१०. T omits तत्
११. G omits मध्य

सन्निधिस्तु—आम्नानसन्निधिः, [१]अनुष्ठानसन्निधिरिति द्विविधः । [२]आद्येन "शुन्धध्वं दैव्याय कर्मणे देवयज्यायै" इति मन्त्रस्य महाप्रकरणावान्तर[३]प्रकरण-रहितस्य सान्नाय्यपात्रप्रोक्षणशेषता । [४]द्वितीयेन पशुधर्माणामग्नीषोमीयशेषता ॥

समाख्या यौगिकी संज्ञा । सा लौकिकी वैदिकी चेति द्विविधा । होतृचमस इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रति, आध्वर्यवमिति याज्ञिकप्रसिद्धलौकिकसमाख्यया अध्वर्योः [५]अन्वाधानादिकं प्रति च कर्तृत्वेन शेषता—इत्येवं शेषशेषिभावः सापवादः तृतीयाध्याये प्रपञ्चितः ॥

एवं सिद्धशेषशेषिभावानां कर्मणामनुष्ठापनशक्तिरूपा प्रयुक्तिश्चतुर्थे निरूपिता । शेष्येव शेषं[६] प्रयुङ्क्ते स्वसिद्ध्यर्थमनुष्ठापयति, न त्वनुनिष्पाद्यपि ; नापि शेषः शेषिणं प्रयुङ्क्ते । अनेकशेषिसद्भावेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्र विनियोगः, तत्र [७]यत्प्रयुक्तस्यान्यत्र विनियोगः स एव शेषं प्रयुङ्क्ते, न तु शेष्यपि सन्नन्योऽपि । एवं च "तप्ते पयसि दध्यानयति" इत्यादिवाक्ये विधीयमानस्य दध्यानयनस्य द्विकर्मकस्य कर्मान्तराकाङ्क्षायां समभिव्याहृतं पयः कर्मान्तरत्वेनान्वीयमानं सप्तम्याधिकरणत्वेन निर्देशात् प्रधानकर्मतया पर्यवस्यतीति प्रकृतप्रधानभूतपयःपरामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया पयोरूपत्वेनावगतामिक्षैव शेषित्वात् स्वशेषभूतदध्यानयनमनुष्ठापयति । न तु तदनुनिष्पादि वाजिनमपीति आमिक्षापचार एव [८]पयोऽन्तरे दध्यानयनस्य प्रयुक्तिः, न वाजिनापचारे । "कृष्णविषाणया कण्डूयते" "चात्वाले कृष्णविषाणां प्रास्यति" इति [९]कृष्णविषाणायाः कण्डूयनप्रासनरूपक्रियाद्वयान्वये सत्यपि कृष्णविषाणा [१०]तृतीयया कण्डूयनं प्रति शेषः, प्रासनं प्रति तु

---

१. T omits अनुष्ठानसन्निधिः
२. T adds तत्र
३. G वान्तरप्रकरणाभिहित
४. T omits द्वितीयेन . . . शेषता
५. G. अवघातादिकं
६. G. विधेयं
७. T. यत्प्रयुक्तयान्यत्र
८. G प्रयोगान्तरे दध्यानयनेन तस्य
९. G. कृष्णविषाणयेति
१०. T omits तृतीयया

द्वितीयया शेषिणीति[1] निर्वृत्तकण्डूयनप्रयोजनीया[2][3]: तस्याः प्रासनात्प्रागुपचारे[4] प्रासनार्थं न[5] पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिः । "पुरोडाशकपालेन तुषानुपवपति" इत्यत्र पुरोडाशप्रयुक्तस्यैव कपालस्य तुषोपवापं प्रत्यपि शेषत्वेन विनियोगात् यत्र पुरोडाशो नास्ति न तत्र तुषोपवापार्थं कपालप्रयुक्तिः—इत्येवं सापवादा प्रयुक्तिश्चतुर्थाध्याये प्रपञ्चिता ॥

एकप्रयोगान्तर्गतानामङ्गप्रधानानामनुष्ठानक्रमः पञ्चमाध्याये[6] श्रुत्यर्थादिभिर्निरूपितः । तत्र "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिश्रुत्या गृहपत्यादीनामुन्नेत्रन्तानां सप्तदशानां सत्रे यजमानानां दीक्षाक्रमः । "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्र होमद्रव्यनिष्पत्त्यर्थयवागूपाकप्रयोजनरूपेणार्थेन पाकहोमयोः क्रमः । "समिधो यजति" इत्यादिविधिविहितानां प्रयाजादीनां विधिवाक्यपाठक्रमेण क्रमः । वाजपेये प्राजापत्यानां पशूनां प्रतिपश्वावर्तनीयेषूपाकरणनियोजनादिषु उपाकरणे यतः कुतश्चित् पशोरारभ्य यत्र क्वचित् पशौ समापिते तेनैव प्रवृत्तिक्रमेण नियोजनादिक्रमः । साद्यस्क्रे क्रतौ "सह पशूनालभते" इति श्रुत्या सवनीयस्थान एवाग्नीषोमीयसवनीयानूबन्ध्यपशुत्रयस्यापि सह कर्तव्यतया प्राप्तौ सवनीयस्थानत्वेन[7] प्रथमं सवनीयपशोरुपाकरणम्, अनन्तरमग्नीषोमीयानूबन्ध्ययोरिति क्रमः । दर्शे पुरोडाशसान्नाय्ययोः मुख्यक्रमेण प्रयाजशेषाभिघारणक्रमः—इत्येवं[8] श्रुत्यादिभिः क्रमः सापवादः प्रपञ्चितः ॥

एवं द्वितीये उत्पत्तिविधिप्रमेयस्य कर्मभेदस्य[9], तृतीये विनियोगविधिप्रमेयस्य शेषशेषिभावस्य, चतुर्थपञ्चमयोः प्रयोगविधिप्रमेययोः प्रयुक्तिक्रमयोश्च निरूपणानन्तरं षष्ठेऽधिकारविधिप्रमेयः फलसम्बन्धो निरूपितः । तत्र स्वर्ग-

---

१. T. शेषीति
२. T. निर्वृत्त
३. G. प्रयोजनकायाः
४. T. पूर्वमपचारे
५. G. तत्पुनः
६. T omits श्रुत्यादिभिः
७. T स्थानेन
८. T. क्रमं श्रुत्यादिभिः सापवादः
९. G. कार्यभेदस्य

कामादिपदं विधि[1]प्रयोजनभूतपुरुषप्रवृत्त्यपेक्षितफ[2]लविशेषान्वयपरम्, न तु चन्द-नादि[3]रूपयागादिद्रव्यसमर्पकम् । त[4]च्च फलं स्वर्गकाम इत्याद्युद्देश्यगतलिङ्ग-विशेषस्याविवक्षितत्वात् स्त्रीणामप्यविशिष्टम् । "ऋद्धिकामाः सत्र-मासीरन्" इ[5]त्यत्रैकैकस्य कृत्स्नं फलम्, न तु परिषद्गतं फलमित्येकैकस्य फलान्वयः—इत्येवमादिरूपेणाधिकारार्थः ष[6]ष्ठे सापवादः प्रपञ्चितः ॥

एवं विधिचतु[7]ष्टयात्मकोपदेशविचारे पूर्वषट्केन कृते ततः परमध्याय-[8]चतुष्टयेनातिदेशविचारः क्रिय[9]ते । 'इत्थं कर्तव्यम्' इति प्रतिप[10]ादनमुपदेशः । 'तद्वत्कर्तव्यम्' इत्यतिदेशः । तत्र सप्तमाष्टमयोर्वचननामधेयचोदकैरतिदेशो निरू-पितः । इषुनामके क्रतौ कांश्चिद्वैशेषिकान् धर्मान् विधायाम्नातेन "समानमितरच्छ्ये-नेन" इति प्रत्यक्षवचनेन [11]श्येनवैशेषिकाङ्गानामिषावतिदेशः ; "मासमग्निहोत्रं जुहोति" इत्यत्र नित्याग्निहोत्रेऽग्निदेव[12]ताकत्वात् तावत्क्लृप्तशक्तिकेन तत्सादृश्य-विधित्सया कौण्डपायिनामयने कर्मणि प्रयुक्तेनाग्निहोत्रनामधेयेन तस्मिन्नित्याग्नि-होत्रधर्माणामतिदेशश्च सापवादः सप्तमे पादत्रयेण निरूपितः ॥

चतुर्थपादेन "सौर्यं चरुं निर्वपेत्" इत्यादिष्वनुपदिष्टधर्मेषु प्रत्यक्ष-वचनस्य नाम्नश्चातिदेशकस्याभावेऽपि कुतश्चिद्वैदिकात् कर्मणो धर्म[13]ग्राहकं वचन-मस्तीत्यानुमानिकवचनरूपेण चोदकेनातिदेशः सामान्यतो निरूपितः ॥

अष्टमे तु कस्य कुतो धर्मप्राप्तिरित्याकाङ्क्षायां शब्दार्थगतसादृश्यविशेष-लिङ्गादिष्टीनां दर्शपूर्णमासतो धर्मप्राप्तिः, अग्नीषोमीयप[14]शुतः पशूनाम्, सवनीयादैकादशिनानाम्, ज्योतिष्टोमात् सोमानाम्, द्वादशाहादहर्गणानाम्, गवामयनात् संवत्सरसत्राणाम्—इत्येवंरूपेण विशि[15]ष्य चोदकातिदेशः सापवादः प्रपञ्चितः ॥

---

१. G. प्रयोगभूत
२. T. पुरुषविशेष
३. T. चन्दनरूपयागादि
४. T. ततश्च
५. T. इत्यादावेकैकस्य
६. T. सापवादः षष्ठे
७. G. चतुष्टयप्रमेयात्मचतुष्टयेनातिदेशविचारे
८. T. चतुर्थेन
९. T omits क्रियते
१०. T omits प्रतिपादनं
११. T omits श्येन
१२. T. देवतासद्भावात् क्लृप्त
१३. G. धर्मप्रापकं
१४. T omits पशु
१५. G. omits विशिष्य

अतिदिष्टानां मन्त्रसामसंस्काराणां प्राकृतपदार्थकार्यापन्नवैकृतपदार्थान्तर-सम्बन्धेनान्यथाभावरूप ऊहो नवमे चिन्तितः । [1]प्राकृतपदार्थकार्यापत्तिः प्रत्यक्षेण अनुमानेन[न, प्रत्यक्षवचनेन,] प्रत्यक्षवचनावगतप्राकृतनिवृत्त्यनुमितशब्देन, प्रत्यक्षवचनावगतलिङ्गोन्नीतनिवृत्त्यनुमितशब्देन वावसीयते । "नैवारश्चरुः" इत्यत्र प्राकृतव्रीहिकार्यहविर्निष्पादकत्वं प्रत्यक्षेणावसीयते, न[2] तु नैवार इति तद्धितेन, "तस्येदम्" इति सम्बन्धसामान्येऽण्प्रत्ययविधानात् तस्य प्रकृतिविकारभावे[3]-रूपसम्बन्धविशेषपर्यवसायित्वकल्पनायाः प्रत्यक्षाधीनत्वात् । नैर्ऋतं चरुं प्रकृत्य[4] "कृष्णानां व्रीहीणां नखनिर्भिन्नम्" इत्यत्र श्रुतस्य नखस्य प्राकृतोलूखलमुसलकार्या-पत्तिः न प्रत्यक्षेणावसीयते । उलूखलमुसलाभ्यां व्रीहीणामवहननं निष्पद्यते[5], नखेन [6]निर्भेदनमिति प्रत्यक्षेण कार्यभेदस्यैव दर्शनात्; किन्तु अवहननेनेव निर्भेदनेनापि तुषविमोकात् [7]तण्डुलनिष्पत्तिदर्शनेन प्राकृतावघातस्योलूखलमुसलकार्यतायां यद्रूपं विवक्षितं तण्डुलनिष्पत्तिद्वारेणापूर्वोपयोगिक्रियात्वं तन्निर्भेदनेऽपि समानमिति तेन रूपेणावहननिर्भेदनयोरैक्यस्योन्नेयत्वात् कार्यापत्तिरनुमानेनावसीयते । "परिधौ पशुं नियुञ्जीत" इत्यत्र [8]प्राकृतपशुकार्ये पशुनियोजने परिधेर्विनियोगः प्रत्यक्षवचनेनाभिधीयते । "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इत्यत्र[9] गिरा-पदोक्तिप्रतिषेधावगतया गिरापदनिवृत्त्या तत्कार्यस्य साधनापेक्षत्वावगमात्तत्कार्य-वाचिपदमनुमाय 'गिरापदकार्यार्थमैरं कृत्वोद्गेयम्' इत्येवंरूपेण श्रुतानुमितैकदेश-निष्पादितेन [10]वाक्येन गिरापदकार्यापत्तिरिरापदस्यावसीयते । "यस्योभयं हविरार्ति-मार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यत्र पञ्चशरावद्रव्यकस्य यागस्य[11] दर्शकार्या-पत्तौ दर्शनिवृत्तिर्न प्रत्यक्षवचनादवगम्यते ; किन्तु द्रव्यनाशादवगम्यते[12][दुन्नीयते] ।

---

१. G omits प्रकृत...पत्तिः and adds तत्र
२. T omits न तु
३. G. भावसंबन्ध
४. G omits प्रकृत्य and reads in its place निर्ऋत्यै चरुं
५. G. निष्पद्यते
६. T adds तेषा
७. T omits तण्डुल...विवाक्षितम्
८. T प्राग्यूपकार्ये
९. T omits इत्यत्र...कृत्वोद्गेयं
१०. G omits वाक्येन
११. T adds च
१२. G. दनुष्ठीयते

IX—43

तन्निवृत्तौ तत्कार्यस्य साधनापेक्षतया[1] तद्वाचिपदमनुमाय 'दर्शकार्यार्थमैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति श्रुतानुमितैकदेशनिष्पाद्येन वाक्येन पञ्चशरावयागस्य दर्शकार्यापत्तिरवसीयते । "स प्रत्यामनेत्स्थानात्[2]" इति षष्ठाध्यायाधिकरणपूर्वपक्षरीत्येदमुदाहरणम् । सिद्धान्ते[3] द्रव्यापचारे द्रव्यान्तरानयनेन दर्शनिष्पत्तेर्न तन्निवृत्त्युन्नयनमस्तीत्युदाहरणान्तरमन्वेषणीयम् ॥

एवं कार्यापत्त्या व्रीहिधर्माणामवघातादीनां नीवारेषु, उलूखलमुसलधर्माणां प्रोक्षणादीनां नखेषु, यूपधर्माणां परिव्याणादीनां परिधौ चोहः संस्कारोहः, दर्शधर्माणां सिद्धान्ते नास्त्यूहः पञ्चशरावयागे । गिरापदगतगीतिक्रियायां[4] इरापदे ऊहः सामोहः । मन्त्रोहस्त्वष्टविधः— क्वचित् प्रकृतिमात्रमूह्यते, यथा "अग्नये[6] जुष्टम्" इति मन्त्रे सौर्यं चरुं प्राप्ते "सूर्याय जुष्टम्" इति ; क्वचिल्लिङ्गमात्रमूह्यते, यथा "वस्व्यसि रुद्रासि" इत्येकहायनीमन्त्रे विकृतिविशेषविहितं सोमक्रयणं वत्सं प्राप्ते "वसुरसि रुद्रोऽसि" इति ; क्वचिद्वचनमात्रमूह्यते, यथा "छागस्य वपाया मेदसः" इति मन्त्रे प्राजापत्यान् पशून् प्राप्ते "छागानाम्" इति ; क्वचित् प्रकृतिर्लिङ्गं चोह्यते, यथा तस्मिन्नेव[7] "अग्नये जुष्टं निर्वपामि[8]" इति मन्त्रे आदित्यं चरुं प्राप्ते[9] "अदित्यै जुष्टम्" इति ; क्वचित् प्रकृतिः वचनं चोह्यते, यथा तस्मिन्नेव मन्त्रे वैश्वदेवं चरुं प्राप्ते "विश्वेभ्यो देवेभ्यः" इति ; क्वचिल्लिङ्गं वचनं चोह्यते, यथा "प्रास्मा अग्निं भरत" इति मन्त्रे "मल्हा आलभेत" इति विहितान्[10] पशून् प्राप्ते "प्राभ्योऽग्निम्" इति ; क्वचित् त्रीण्यप्यूह्यन्ते, यथा "आपो देवीः" इति मन्त्रे[11] "आज्यं प्रोक्षणम्" इति सोमारौद्रचरौ विहितं घृतं प्राप्ते "घृत देव[12]" इति ; क्वचित् सकलस्य पदस्याभ्यासरूप ऊहः यथा "एकधास्य त्वचमाच्छ्य-

---

१. T. पेक्षया
२. T. प्रत्यमाने
३. T adds तु
४. G. क्रियायामिरापदे
५. Both G and T read दर्श...यागे after समोहः G दर्शधर्माणां तु
६. G. "अग्नये जुष्टं निर्वपामि" इत्यत्राग्नि-स्थाने सौर्यचरौ "सूर्याय" इति
७. T omits तस्मिन्नेव
८. T omits निर्वपामीति मन्त्रे
९. T adds मन्त्रे
१०. T. विहितं पशुं
११. G. मन्त्रेण
१२. G. घृतं देवं

तात्" इति मन्त्रे पशुगणं प्राप्ते "एकधैकधा" इति । एवमूहः सापवादो नवमे प्रपञ्चितः[1] ॥

एवमातिदेशिकपदार्थगतरूपान्तरात्मकोहनिरूपणानन्तरं तन्निवृत्त्यात्मको बाधो दशमे निरूपितः । निवृत्तिश्च कस्यचित् क्वचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतावविज्ञातत्वेन तद्ग्राह्यत्वासंभवात्, यथा दर्शपूर्णमासाङ्गभूताया आरम्भणीयायाः[ याः आम्भणीयायाम् ] । न ह्यारम्भणीयाविधानसमये[2] दर्शपूर्णमासयोरारम्भणीयाङ्गमिति विज्ञातम्, येन सापि प्रयाजादिवदतिदेशवाक्येन[3] गृह्येत ; कस्यचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतौ[4] विज्ञातस्याप्यसम्भवान्निवृत्तिः, यथा पवमानेष्टावग्निहोत्रहवण्याः । ययाग्निहोत्रं हुतं साग्निहोत्रहवणी प्रकृतौ "अग्निहोत्रहवण्या हवींषि निर्वपति" इति निर्वापकरणत्वेन[5] ग्राह्येति स्थितम् । न च पवमानेष्टिसमयेऽग्निहोत्रं हुतम् । क्वचित् द्वारलोपान्निवृत्तिः तत्र द्वारलोपः क्वचित् द्वारस्याभिमतस्य[6] स्वतः सिद्धतया, यथा कृष्णलेष्ववघातद्वारस्य वैतुष्यस्य स्वतःसिद्धतयावघातस्य निवृत्तिः ; क्वचित् पूर्वसिद्धतया, यथा "खलेवाली यूपो भवति" इत्यत्र खलेवाल्याः[7] प्रागेव छित्वा तक्षणेन श्लक्ष्णीकृत्य निखातायाः छेदनतक्षणोच्छूर्णणादीनां[8] निवृत्तिः ; क्वचित् द्वारसंपादनाशक्त्या । यथा—प्राशित्रेडाभक्षणार्थेषु कृष्णलेषु अभिघारणजन्योपकारस्य स्वादिम्नः संपादयितुमशक्यत्वात् अभिघारणस्य[9] ; क्वचित् सिद्धशेषिविरोधान्निवृत्तिः, यथा—आग्रयणदक्षिणा[10]रूपे वत्सेऽन्वाहार्यधर्मस्य पाकस्य । पाके हि कृते वत्सो नश्येत् ; तन्मांसमेव दक्षिणा स्यात् । क्वचित् साध्यशेषिविरोधात् तन्निवृत्तिः[11], यथा "बार्हस्पत्यो नैवारः

---

१. T. विचिन्तितः

२. T विधिसमये

३. T. देशवाक्येन

४. T. प्रवृत्तौ

५. T. अत्र निर्वापे करणत्वेन

६. G Space is left out for writing द्वारस्य

७. T. प्रागेव खलेवाल्याः

८. T. उच्छूर्णातां

९. G. अभिघारणनिवृत्तिः

१०. G Space is left out for writing णदक्षि

११. T omits तत्

सप्तदशशरावः चरुर्भवति" इत्यत्र निर्वाप्येषु[1] "चतुरो मुष्टीन्निर्वपति" इत्यतिदेशप्राप्तस्य[2] चतुर्मुष्टिपरिमाणस्य सप्तदशपरिमाणचरुरूपसाध्यशेषिविरोधित्वात् संख्यामुष्ट्योर्[3]न्यतरबाधावश्यंभावे जघन्यत्वान्मुष्टिनिवृत्तिः ; क्वचिद्विरोधाभावेऽपि प्रयोजनाभावान्निवृत्तिः[4], यथा आग्रयणदक्षिणारूपे वाससि पाकस्य । प्रकृतौ[5] हि अन्वाहार्यरूपदक्षिणाद्रव्यनिष्पत्त्यर्थम् "दक्षिणाग्नावपरिमितं महान्तमोदनं पचति[6]" इति पाको विहितः । इह दक्षिणाद्रव्ये वाससि प्रागेव निष्पन्ने स्थिते तन्निष्पत्त्यनुपयोगिना किं पाकेन ॥

द्वार[7]लोपान्निवृत्तिरित्यत्र द्वारशब्देन यद्द्वारतया फलतया वा प्रयोजनं तत्सर्वं[8] विवक्षितम् । तेन मृते यजमाने क्रियमाणायामिष्टौ "आयुराशास्ते" इत्यादिमन्त्राणां विवक्षितफलानां मृतयजमानस्यायुरादिफललोपान्निवृत्तिरप्युदाहरणमित्यादि[9] द्रष्टव्यम्[10] ॥

क्वचित् प्रत्याम्नानात् प्राकृतपदार्थानां[11] निवृत्तिः । साप्यनेकविधा । क्वचिदुपदिष्टपदार्थविरोधान्निवृत्तिः, यथा—"औदुम्बरो यूपो भवति" इति वैकृतपशौ[12] अतिदेशप्राप्तयूपोद्देशेन उदुम्बर[13]रूपप्रकृतिद्रव्यविधानात्[14] उदुम्बरप्रकृतिके यूपे प्राकृतस्य बिल्वपलाशादेः विरोधेन प्रकृतित्वासम्भवान्निवृत्तिः ; क्वचिदुपदिष्टपदार्थ[15]गतश्रुतनैरपेक्ष्यविरोधान्निवृत्तिः , यथा—"नैवारश्चरुर्भवति" इत्यत्र नीवारप्रकृतिके चरौ व्रैहतण्डुलानामपि मिश्रणेन प्रकृतित्वसम्भवेऽपि नीवारशब्दपर-

---

१. T. निर्वापेषु
२. T. देशप्राप्तसप्तदशशरावपरिमाण-
३. T. मुष्टेः
४. G. Space is left out for writing योजनाभावात्
५. T. प्रवृत्तौ
६. G. Space is left out for writing पच...दक्षिणा
७. G. adds यदा
८. G. तत्सर्वमपि वि...तमनेन
९. G. इति
१०. T. द्रव्येष्टौ
११. T. पदार्थनिवृत्तिः
१२. G. दैक्षपशौ
१३. T. औदुम्बरयूप
१४. T विधौ
१५. T omits पदार्थ

तद्धितोत्पत्त्यवगतनैरपेक्ष्यविरोधात् व्रीहीणां निवृत्तिः । नीवाराणां व्रीहिसापेक्षाणां चरुप्रकृतित्वे हि सापेक्षमसमर्थमिति असमर्थात् तद्धितोत्पत्तिः न स्यात् । क्वचिदविरोधेऽपि नैरपेक्ष्यान्निवृत्तिः, यथा—आग्रयणे " वासो दक्षिणा " " वत्सः प्रथमजो दक्षिणा " इति श्रुताभ्यां वासोवत्साभ्याम् ऋत्विजामानतौ तयोरन्वाहार्यनिरपेक्षकारणत्वात् [2]प्राकृतान्वाहार्यदक्षिणाया निवृत्तिः ; क्वचिन्नैरपेक्ष्याभावेऽपि नियमवशात् निवृत्तिः, यथा—ऋतपेये "औदुम्बरसोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देयः" इति श्रुतेन सोमचमसेन केवलं ब्रह्मणे दत्तेन लौकिकोपायान्तरमनपेक्ष्य ऋत्विजामा[3]नतेरसम्भवेऽपि श्रुतनियमविधिवशात् [4]प्राकृतद्वादशशतदक्षिणाया निवृत्तिरित्युदाहरणीयम्[5] ॥

क्वचित् प्रतिषेधात् प्राकृतपदार्थनिवृत्तिः । प्रतिषेधशब्देनात्र यः कश्चित् प्राकृतपदार्थनिवृत्ति[6]परो विधिः स सर्वोऽपि विवक्षितः । तेन महापितृयज्ञे " नार्षेयं वृणीते " इत्यनेन आर्षेयवरणवर्जं प्रकृतिवत् कुर्यात् इति पर्युदासेन या तस्मिन्[7]नार्षेयवरणनिवृत्तिः "न तौ पशौ करोति" इति आज्यभागनि[8]षेधाद्वा पशावाज्यभागानिवृत्तिः, "आज्यभागौ यजति[9]" इति अपूर्वतापरविधिना आज्यभा[10]गयोः या गृहमेधीये निवृत्तिः सा [11]सर्वाप्यत्रोदाहरणम् । [12]एवं च दर्शपूर्णमासयोः "कपालेषु श्रपयति " इति वाक्यस्य तण्डुलहविष्केषु चित्रादिषु व्रीह्युपादाननिवृत्तेरेव फलत्वात् साप्यत्रोदारणम् । यथा च " कपाले[13]षु श्रपयति " इति विधेः तण्डुलहविष्कासु विकृतिषु प्रकृतिद्रव्योपादाननिवृत्तिरेव फलम् , तथा [14]प्रपञ्चेन प्रसाधितमस्माभिः **विधिरसायने** ॥

---

१. G. तद्धितानुत्पादात्

२. T. प्राकृतान्वाहार्ये

३. G. नतेः

४. T प्राकृत्या

५. T. उदाहार्यम्

६. T. निवृत्तिफलको

७. G. Space is left out for writing नार्षे...वृत्तिः

८. T. निषेधात्

९. G. करोति

१०. T. भागानां

११. T omits सर्वा

१२. G omits एवं च

१३. G. Space is left out for writing लेषु...विधेः

१४. T omits प्रपञ्चेन

एवमुपदेशविषये[1] अतिदेशविषये च पृथङ्निरूपणीयेषु निरूपितेषु तदुभयसाधारणयोः तन्त्रप्रसङ्गयोः निरूपणीययोः एकादशे तन्त्रं निरूपितम् । तत्त्रिविधम्—फलतन्त्रम्, पदार्थतन्त्रम्[2], अनुष्ठानतन्त्रम् चेति । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र[3] फलमुद्दिश्योपादीयमानानां आग्नेयादीनां षण्णां द्वन्द्वावगतम्, "राजसूयेन[4] स्वाराज्यकामो यजेत" इत्यत्र बहूनामिष्टिपशुसोमानामेकेन नाम्नोपादानात्[5] तन्त्राभिधानावगतं च साहित्यं विवक्षितमिति सहितानां फलान्वयात् आग्नेयादीनां षण्णां फलं राजसूयनामगृहीतानां च फलं साधारणम् । तदेतत् फलतन्त्रम् ॥

"समे दर्शपूर्णमासाभ्यां यजेत" "पौर्णमास्यां पौर्णमास्या यजेत" "दर्शपूर्णमासयोः चत्वार ऋत्विजः" इति विहिता देशकालकर्तार एकफलसाधनानां कर्मणां यथायोगं साधारणा इत्येतत्पदार्थतन्त्रम् ॥

एकफलानामेकदेशकालकर्तृकाणां यदङ्गभूतप्रयाजाद्यनुष्ठानं साधारणं तदनुष्ठानतन्त्रम् । फलैक्येऽपि यत्र देशकालकर्तॄणामन्यतमस्यापि भेदः तत्र प्रतिप्रधानमङ्गानुष्ठानावृत्तिलक्षणः आवापः । तत्र द्वादशाहे द्वादशानां सोमयागानां द्वादशस्वहस्सु कर्तव्यानां कालभेदात् सुत्याकालकर्तव्यसवनीयपशुप्रभृत्यङ्गानुष्ठानावृत्तिः, वरुणप्रघासेषु नवहविष्कायामिष्टौ विहारद्वयं विधाय "अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इति देशभेदविधानात् तत्र तत्र देशेऽष्टानां हविषां मारुत्याश्चाङ्गानुष्ठानं भिद्यत इति देशभेदेन तदावृत्तिः ; तत्रैव "गार्हपत्ये पत्नीसंयाजान् जुहोति" इति विहितानाम् आपराग्निकहोमानां[6] देशकालैक्येऽपि अध्वर्युप्रतिप्रस्थातृरूप-

१. G विषयेष्वतिदेशविषयेषु च
२. G. अनुष्ठानतन्त्रं पदार्थतन्त्रं चेति
३. T adds बहूनाम् एकं
४. T. राज...नावगतं is written after आग्नेयादीनां षण्णां
५. T. नाम्ना तन्त्रा
६. G. आपराह्णिक

कर्तृभेदात् भेदः । यत्र कर्तृत्वाधिष्ठानाभेदेऽपि कर्तृकारकभेदः तत्रापि प्रयोगभेदेन अङ्गानुष्ठानावृत्तिरेव, यथा "अग्नावैष्णवमेकादशकपालं निर्वपति वामनो वही दक्षिणा" "सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणा" इत्यादिवाक्यविहितेषु[2] राजसूयान्तर्गतयागेषु देशकालफलभेदाप्रतीतावपि वामनानतैः आग्नावैष्णवयागः कर्तव्यः ; श्यामानतैः सोमापौष्णः चरुः कर्तव्य इत्येवं दक्षिणाव्यवस्थया[3] तद्भेदात् कर्तृरूपं भिद्यत इति ततः[4] [इत्यतः] प्रतियागप्रयोग-भेदात् अङ्गानुष्ठानावृत्तिः । यानि तु कालभेदेन कर्तव्यानामपि प्रधानानां[5] कर्मकालाद्यङ्गानि तान्यगृह्यमाणविशेषत्वात् सर्वेषां[6] तन्त्रं भजन्ति, यथा ज्योतिष्टोमे अग्नीषोमीयसवनीयानूबन्ध्यपशूनाम् "दीक्षासु यूपं छिनत्ति" इति दीक्षाकालकर्तव्यत्वेन विहितो यूपः ; यथा द्वादशाहे द्वादशानां सोम-यागानामहर्भेदेन कर्तव्यानां दीक्षोपसदादय इत्येवं[7] सापवादं तन्त्रमेकादशे निरूपितम् ॥

द्वादशे प्रसङ्गो निरूपितः । अन्यार्थेनान्यस्य तत्प्रयुक्तिशक्तस्योपकारः[8] प्रसङ्गः—यथा भोजनार्थं प्रथममागतस्याचार्यस्य कृतेन सूपापूपादिना पश्चादागतस्य स्वयमाचार्यनैरपेक्ष्येणापि सूपापूपादिप्रयुक्तिशक्तस्य[9] जामातुरुपकारः । यत्तु अन्या-र्थेन स्वयं तत्प्रयुक्तिशक्तिरहितमुपक्रियते तन्न प्रसङ्गि ; किन्तु आचार्यार्थकृत-सूपाद्युपक्रियमाणपरिचारकादिवत् तदुपजीव्यप्रयोजकम्[10], यथा दध्यानयनेन उपक्रियमाणं वाजिनम् । पुरोडाशकपालं प्रति तुषोपवापस्य शेषित्वे सत्यपि न तत्प्रयुक्तिशक्तिः पुरोडाशकपालेनेति सविशेषणोपादानेनान्यप्रयुक्त्युप[11]-जीवित्वाविष्करणात् । स च प्रसङ्गः त्रिविधः—अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः

---

१. T. प्रयोगभेदादङ्गानामावृत्तिरेव
२. G. वाक्येषु
३. G. व्यवस्थितया
४. G. Space is left out for writing ततः . . . अङ्गा
५. T. प्रधानकर्मणा कर्म-
६. G. Space is left out for writing सर्वेषां तन्त्रं
७. T. इत्येवं रूपेण
८. T. शक्तिकस्य
९. T. शक्तिकस्य
१०. T. प्रयोजनं
११. G. Space is left out for writing नान्य . . . प्रसङ्गः

शास्त्रप्रसङ्गश्चेति । तत्र पश्वर्थप्रयाजाद्यनुष्ठानेन पशुपुरोडाशाद्युपकारोऽनुष्ठानप्रसङ्गः ; सौमिक्या वेद्या सोमान्तर्गतेष्टिपशूनामुपकारः पदार्थप्रसङ्गः ; "याजनादिभिः ब्राह्मणो धनमार्जयेत्" इति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्याविशेषेण त्रैवर्णिकानामार्त्विज्यमाक्षेप्तुं प्रवृत्तस्योपकारः शास्त्रप्रसङ्गः—इत्येवमादिरूपेण द्वादशे सापवादः प्रसङ्गो निरूपितः ॥

इति धर्ममीमांसासारसङ्ग्रहव्याख्या परिभाषा
पूर्वमीमांसाविषयसङ्ग्रहदीपिका
अप्पय्यदीक्षितकृता
॥ समाप्ता ॥

——— :o: ———

# जैमिनीयन्यायमालाविषयसूचिका

# विषयानुक्रमणिका

## प्रथमोऽध्यायः

## द्वितीयोध्यायः [कर्मभेदः]

### प्रथमः पादः

## तृतीयः पादः



## चतुर्थः पादः

## विषयानुक्रमणिका

## अष्टमः पादः

विषयानुक्रमणिका

[अधि०] [पार्श्व]

# चतुर्थोऽध्यायः [प्रयुक्तिविचारः]

## प्रथमः पादः



## द्वितीयः पादः



## तृतीयः पादः

## पंचमाध्यायः [अनुष्ठानक्रमः]

## द्वितीयः पादः



## तृतीयः पादः

विषयानुक्रमणिका



## तृतीयः पादः



## चतुर्थः पादः

**पंचमः पादः**



**षष्ठः पादः**

### चतुर्थः पादः



## अष्टमोऽध्यायः [विशेषातिदेशः]

### प्रथमः पादः

## द्वितीयः पादः



## तृतीयः पादः

## दशमोऽध्यायः [बाधः]

## चतुर्थः पादः

पंचमः पादः

## विषयानुक्रमणिका

## एकादशोऽध्यायः [तन्त्रम्]

**प्रथमः पादः**

विषयानुक्रमणिका

## द्वितीयः पादः



## तृतीयः पादः

चतुर्थः पादः

# अध्यायपादाधिकरणप्रदर्शकयन्त्रम्

| अध्यायः | पादेषु अधिकरणानि | | | | | | | आहृत्याधिकरणानि |
|---|---|---|---|---|---|---|---|---|
| | प्र० | द्वि० | तृ० | च० | प० | ष० | स० | अ० | |
| प्रथमः | 8 | 4 | 10 | 20 | | | | | 42 |
| द्वितीयः | 18 | 13 | 14 | 2 | | | | | 47 |
| तृतीयः | 15 | 19 | 20 | 21 | 20 | 16 | 23 | 23 | 157 |
| चतुर्थः | 17 | 13 | 20 | 12 | | | | | 62 |
| पचमः | 18 | 12 | 15 | 9 | | | | | 54 |
| षष्ठः | 13 | 11 | 21 | 14 | 21 | 7 | 13 | 9 | 109 |
| सप्तमः | 5 | 1 | 14 | 3 | | | | | 23 |
| अष्टमः | 19 | 6 | 6 | 4 | | | | | 35 |
| नवमः | 18 | 20 | 14 | 15 | | | | | 67 |
| दशमः | 11 | 34 | 20 | 27 | 26 | 22 | 20 | 19 | 179 |
| एकादशः | 11 | 16 | 16 | 21 | | | | | 64 |
| द्वादशः | 21 | 15 | 16 | 16 | | | | | 68 |
| | | | | | | | | | 907 समुदिताधिकरणानि |

# जैमिनीयन्यायमालाविस्तरस्य

## प्रथमोऽध्यायः ।



वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

युक्तिं मानवतीं विदन् स्थिरधृतिर्भेदे विशेषार्थभाक्
आप्तोहःक्रमकृत्प्रयुक्तिनिपुणः श्लाघ्यातिदेशोन्नतिः ।
नित्यस्फूर्त्यधिकारवान् गतसदाबाधः स्वतन्त्रेश्वरो
जागर्त्ति श्रुतिमत्प्रसङ्गचरितः श्रीवुक्कणक्ष्मापतिः ॥ २ ॥

यद् ब्रह्म प्रतिपाद्यते प्रगुणयत् तत् पञ्च मूर्तिप्रथां
तत्रायं स्थितिमूर्तिमाकलयति श्रीवुक्कणक्ष्मापतिः ।
विद्यातीर्थमुनिस्तदात्मनि लसन् मूर्त्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैरखण्डितपद सार्वज्ञ्यमुद्योतते ॥३॥

इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैव्यस्य मेधातिथिः
धौम्यो धर्मसुतस्य वैण्यनृपते स्वौजा निमेर्गौतमः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद् वत् तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥

स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः ।
अकरोत् जैमिनिमते न्यायमालां गरीयसीम् ॥ ५ ॥

तां प्रशस्य सभामध्ये वीरश्रीवुक्कभूपतिः ।
कुरु विस्तरमस्यास्त्वमिति माधवमादिशत् ॥ ६ ॥

स भव्याद् भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपामव्याहृतां लब्ध्वा परार्घ्यप्रतिमोऽभवत् ॥ ७ ॥
निर्माय माधवाचार्यो विद्वदानन्ददायिनीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये ॥ ८ ॥

न्यायमालाया आदौ स्वकीयग्रन्थत्वद्योतनाय स्वमुद्रारूपमनेकार्थगर्भं देवतानमस्कारप्रतिपादकं श्लोकं पठति । वागीशाद्या इति ।

इष्टदेवतां नमस्कृत्य चिकीर्षितार्थपरिपालनाय पालके स्वामिनि विद्यमानं महिमानमनुस्मारयति । युक्तिं मानवतीमिति । अत्र चिकीर्षितधर्मशास्त्रे वर्तमानानां द्वादशानामध्यायानां ये प्रतिपाद्या अर्था ये च नीतिशास्त्रोक्ता राजधर्मास्ते सर्वेऽप्यस्मिन् भूपतौ उपलभ्यन्ते । नीतिपक्षे युक्तिर्योगः सन्धिः । सा च युक्तिः मानवती । मानः सत्कारः चतुर्षु सामभेददानदण्डेषु उपायेषु प्रथमः उपायः । वैरिणो जड्डिभेदो द्वितीयः उपायः । एताभ्यां दानदण्डावप्युपलक्ष्येते । एतैश्चतुर्भिरुपायैर्विशेषेणार्थं धनं भजति प्राप्नोति । एतावता शक्तित्रयः कथितः । अवशिष्टेन स्वराज्यप्रतिपालनप्रकारः प्रतिपाद्यते । आसेषु अमात्यप्रभृतिषु पुरुषेषु अयमीदृशस्य व्यापारस्य योग्यो नान्यस्य इत्येवमूहापोहकुशलः । राजसभायामेते तपस्विनः पूज्या विप्रा दक्षिणभागे उपवेशनीया एते च भृत्या वामभागे इति क्रमं करोति । तत् तत् ग्रामेषु अधिकृतान् पुरुषान् उचितबुद्धिप्रदानेन प्रयोक्तुं निपुणः । समुद्रपर्य्यन्तत्वे नातिबहुलस्य देशस्य उन्नतिः समस्तभोग्यवस्तुसम्पत्तिः । सा च परराष्ट्र-

निवासिभिः सकलप्राणिभिः श्लाघ्यते । इदं कर्त्तव्यमिदं नेत्येवं कार्य्याकार्य्यविषया स्फूर्त्तिस्तस्यामधिकारोऽस्य राज्ञो नित्यः । सर्वत्राप्रतिहतबुद्धित्वात् । गतो विनिवारितः सतां तपस्विनाम् आबाधो विघ्नो येनासौ गतसदाबाधः । देशान्तराधिपतीनां राज्ञाम् एतदधीनत्वेनापरप्रेष्यत्वादयं स्वतन्त्रः । जगदीश्वरस्य विद्यातीर्थमुनेर्भोगमूर्तित्वेनायमीश्वरः । यस्य सभायां गोष्ठीरूपः प्रसङ्गो वेदार्थविषयत्वेन श्रुतिमान् । यदीयं चरितमपि निरन्तरं वेदोक्तरहस्यार्थानुष्ठानरूपत्वेन श्रुतिमत् भवति । सोऽयं श्रुतिमत्प्रसङ्गचरितः । एवंविधो वुक्कणभूपतिः अन्तः परमेश्वरध्याने वहिः प्रजापालने च नित्यं जागर्त्ति । यथा नीतिशास्त्रोक्तेषु सामभेदादिषु अयं कुशलः । तथा सर्वज्ञावतारत्वात् धर्मशास्त्रोक्तेषु प्रमाणादिप्रसङ्गान्तेषु अध्यायार्थेषु कुशलः । ते च अध्यायार्था उपरिष्टात् प्रदर्शयिष्यन्ते ।

राज्ञः सर्वज्ञत्वं सोपपत्तिकं प्रकटयति यद् ब्रह्म प्रतिपाद्यत इत्यादिना । सर्वासूपनिषत्सु प्रतीयमानं यत् परं ब्रह्म तदेव शैवागमेषु सृष्टिस्थितिसंहारनिरोधनानुग्रहलक्षणपञ्चकृत्य सिद्ध्यर्थमीशानतत्पुरुषाघोरवामदेवसद्योजातलक्षणानां पञ्चानां मूर्तीनां प्रथां प्रसिद्धिं विस्तारं वा प्रगुणयति प्रकटीकरोतीति प्रतिपाद्यते । तत्र तासु मूर्त्तिष्वयं भूपालः स्थितिमूर्तिं धत्ते । तस्या मूर्तेरात्मनि लसन् विद्यातीर्थमुनिः कृत्स्नस्य जगतोऽनुग्राहिका मूर्तिरित्युच्यते । यस्मादयं भूपो वेदान्तोक्तं परं ब्रह्म यस्माच्चागमोक्ता महेश्वरस्य स्थितिमूर्त्तिर्यस्माच्च श्रीविद्यातीर्थमुनि-

स्वदात्मनि सन्निधाय प्रकाशते। तस्मात् सर्वज्ञत्वमस्य राज्ञ उत्कर्षेणाविद्वदङ्गनागोपालमविवादेन प्रतिभासते।

उक्तगुणोपेतस्य राज्ञो मन्त्रिणं नानापुराणप्रसिद्धदृष्टान्तै-र्हितकारितया प्रशंसति। इन्द्रस्याङ्गिरस इति।

चिकीर्षितग्रन्थे श्रद्धातिशयमुत्पादयितुं कर्तृगौरवं प्रकटयति।

श्रुतिस्मृतिसदाचारपालको माधवो बुधः।
स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः॥ ८॥

सर्ववर्णाश्रमानुग्रहाय पुराणसारपराशरस्मृतिव्याख्या-नादिना स्मार्तो धर्मः पूर्वं व्याख्यातः। इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्मव्याख्यानाय प्रवृत्तः।

---

ग्रन्थमारिप्सुर्गुरुमूर्त्युपाधिकं सकलवेदशास्त्रप्रवर्त्तक-त्वेनात्रोचितेष्टदेवतारूपं परमेश्वरमादौ नमस्कृत्य श्रोतृ-प्रवृत्तिसिद्ध्यर्थं विषयप्रयोजने दर्शयंस्तं ग्रन्थं प्रतिजानीते।

प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम्।
जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम्॥ १॥

जैमिनिप्रोक्तानि धर्मनिर्णायकान्यधिकरणानि न्यायाः तेऽस्य ग्रन्थस्य विषयः। पठितुं सुशकैः कतिपयैरेव श्लोकै-स्तेषां स्फुटीभावः प्रयोजनम्। न्यायमाला संगृह्यत इति ग्रन्थनामनिर्देशपूर्विका प्रतिज्ञा। तस्य करिष्यमाणग्रन्थस्य प्रकारं दर्शयति।

एको विषयसन्देहपूर्वपक्षावभासकः।
श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते॥ २॥

चत्वारोऽवयवा एक श्लोकेनोक्ताः क्वचित् क्वचित् ।
यत्र क्वापि बहुश्लोकैरुच्यन्तेऽतो न विस्तरः ॥ ३ ॥

एकैकस्याधिकरणस्य विषयः सन्देहः सङ्गतिः पूर्वपक्षः सिद्धान्तश्चेति पञ्चावयवाः । तत्र सङ्गतिरनन्तरमेव व्युत्पादयिष्यमाणेन प्रकारेण प्रत्यधिकरणं स्वयमेवोहितुं शक्यते । अवशिष्टानां चतुर्णामवयवानां संग्राहकाः क्वचित् बहवः श्लोकाः क्वचिदेक इत्यावापोद्वापाभ्यामन्ततः प्रत्यधिकरणं श्लोकद्वित्वे संख्या पर्य्यवस्यति । अतो बहुत्वाद् बिभ्यता ग्रन्थगौरवशङ्का न कर्त्तव्या । तमेव ग्रन्थबाहुल्याभाव स्फुटीकुर्वन् रूपकव्याजेन सुबोधत्वं दर्शयति ।

सर्वथापि सहस्रे द्वे नातिक्रामति संग्रहः ।
मीमांसासागरस्तेन क्रीड़ापुष्करिणी भवेत् ॥ ४ ॥

श्लोकेन श्लोकाभ्यां श्लोकैर्वा यथासम्भवं न्यायः संगृह्यताम् । सर्वथापि सहस्रन्यायसंग्रहरूपो ग्रन्थः श्लोकसहस्रद्वयपूर्त्तेरर्वागेव समाप्यते । न तु सहस्रद्वयमतिक्रामति । भाष्यटीकादीनां बहुत्वाद् दुरवगाहत्वाच्च मीमांसा सागरसमा पूर्वमासीत् । क्रियमाणेन त्वनेनैव ग्रन्थेन दोषद्वयरहितेन राजपुत्राणां बालानां क्रीड़ार्थं निर्मितया नातिदूरा पुष्करिण्या समा भविष्यति । यद्यपि शास्त्रदीपिकादौ क्वचित् क्वचित् संग्रहश्लोकोऽस्ति तथापि न सर्वत्र विद्यते । यत्रास्ति तत्रापि विषयसंशययोरसंग्रहान्न श्लोकपाठमात्रेणाधिकरणमुपन्यसितुं शक्यते । अतो न क्वापि गतार्थत्वं शङ्कनीयम् । सङ्गतिं व्युत्पादयति ।

शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा ।

शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम् ॥ ५ ॥

शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्चेति त्रिविधा सङ्गतिः। सा च शास्त्रादीनां त्रयाणामसाधारणे विषये ज्ञाते सति स्वयमेवोहितुं शक्या। शास्त्रस्याध्यायानां चासाधारणं विषयं दर्शयति।

धर्मो द्वादशलक्षण्यां व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥ ६ ॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः।
ऊहोबाधश्च तन्त्रञ्च प्रसङ्गश्चोदिताः क्रमात् ॥ ७ ॥

लक्षणान्यध्यायाः। द्वादशानां लक्षणानां समाहारो द्वादशलक्षणी। तादृशस्य द्वादशाध्यायोपेतस्य शास्त्रस्य धर्मो विषयः। प्रमाणादयः प्रसङ्गान्ता द्वादशपदार्थाः क्रमाद् द्वादशानामध्यायानां विषयाः प्रथमेऽध्याये विध्यर्थवादादिरूपं धर्मे प्रमाणं निरूपितम्। द्वितीये यागदानादिकर्मभेदः। तृतीये प्रयाजादीनां दर्शपूर्णमासाद्यर्थत्वेन तच्छेषत्वम्। चतुर्थे गोदोहनस्य पुरुषार्थत्वप्रयुक्त्यानुष्ठानम्। नतु क्रत्वर्थत्वप्रयुक्त्येत्येवमादयः। पञ्चमे क्रमनियतिविधेयत्वादयः। षष्ठे कर्त्तुरधिकारो नान्धादेरित्यादयः। सप्तमे समानमितरच्छ्येनेनेत्यादिप्रत्यक्षवचनेनाग्निहोत्रादिनाम्नानुमितवचनेन च सामान्यतोऽतिदेशः। अष्टमे सौर्य्यं चरुं निर्वपेदित्यत्र निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादिलिङ्गेनाग्नेयपुरोडाशेऽतिकर्त्तव्यतैव नान्यस्येत्येवमादिर्विशेषतोऽतिदेशः। नवमे प्रकृतावग्नये जुष्टं निर्वपामि इति पठिते मन्त्रे विकृतौ सौर्य्यचरा-

वग्निपदपरित्यागेन सूर्य्यपदप्रक्षेपेण सूर्य्याय जुष्टं निर्वपामि इत्येवमाद्यूहः । दशमे कृष्णलेषु चोदकप्राप्तस्याव- घातस्य वितुषीकरणासम्भवेन लोप इत्येवमादिर्बाधः । एकादशे बहूनामाग्नेयादीनां प्रधानानां सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकार इत्यादितन्त्रम् । द्वादशे प्रधानस्य पश्वोरुपकारायानुष्ठितेन प्रयाजाद्यङ्गेन पश्वङ्गपुरोडाशेऽप्यु- पकार इत्यादिप्रसङ्गः । पादानामसाधारणं विषय दर्शयति ।

विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम् ।
प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ॥ ८ ॥

प्रथमे पादे विधिरूपं मानमीरितम् । द्वितीयेऽर्थ- वादरूपम् । अर्थवादो मन्त्रस्याप्युपलक्षकः । तृतीये स्मृति- रूपम् । स्मृतिराचारमप्युपलक्षयति । चतुर्थे उद्भिच्चित्रादि नामरूपम् ॥

उपोद्घातः कर्मभेदमानं तस्यापवादगीः ।
प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः ॥ ९ ॥

द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेवापूर्वबोधक- मपूर्वसद्भाव इत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः । तृतीये रथन्तरादीनां कर्मभेदप्रामाण्यापवादः । चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः ।

श्रुतिर्लिङ्गं च वाक्यादि विरोधप्रतिपत्तयः ।
अनारभ्योक्तिबह्वर्थसाम्यर्था अष्टपादगाः ॥ १० ॥

तृतीयाध्यायस्य प्रथमे पादे शेषत्वबोधकानां श्रुति-

लिङ्गादीनां मध्ये श्रुतिर्विचारिता। द्वितीये लिङ्गम्। तृतीये वाक्यप्रकरणादि। चतुर्थे निवीतोपवीतादिष्वर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसदसद्भावः। पञ्चमे प्रतिपत्तिकर्माणि। षष्ठेऽनारभ्याधीतानि। सप्तमे बहुप्रधानोपकारकप्रयाजादीनि। अष्टमे याजमानानि॥

प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता।

फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः॥ ११॥

चतुर्थाध्यायस्य प्रथमे पादे प्रधानभूतामिक्षादध्यानयनस्य प्रयोजिकेत्यादिप्रधानप्रयोक्तृत्वं विचारितम्। द्वितीये त्वप्रधानम्। वत्सापाकरणं शाखाच्छेदे प्रयोजकमित्याद्यप्रधानप्रयोक्तृत्वम्। तृतीये जुहूपर्णमयीत्वादेरपापश्लोकश्रवणादिफलभावाभावचिन्ता। चतुर्थे राजसूयगतजघन्याङ्गाक्षद्यूतादिचिन्ता।

श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने।

श्रुत्यादेर्बलता चेति पञ्चमाध्यायपादगाः॥ १२॥

पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः। द्वितीये वाजपेयगतेषु सप्तदशसु पशुष्वेकैकधर्मसमापनमित्यादिक्रमविशेषः। तृतीये पञ्चप्रयाजादीनामावर्त्तनेनैकादशत्वमित्यादिवृद्धिः। अदाभ्यग्रहचित्रिण्योरनावृत्तिरित्यादिवृद्ध्यभावः। चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबलदुर्बलभावः।

अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने।

दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः॥ १३॥

षष्ठाध्यायस्य प्रथमे पादे कर्माधिकारः कर्त्तुरस्त्यन्धादे-र्नास्ति स्त्रिया अस्ति। योऽस्ति स च पत्या सहेत्येवमादि-नाधिकारी निरूपितः। द्वितीये सत्राधिकारिणां प्रत्येकं कृत्स्नं फलम्। दर्शपूर्णमासयोः कर्त्रैक्यनियमः। काम्य-कर्मसमापनीयमित्येवमादयोऽधिकारिधर्मा उक्ताः। तृतीये द्रव्यस्य प्रतिनिधिरस्ति। देवादीनामग्न्यादीनामधि-कारिणश्च स नास्तीत्यादिनिरूपणम्। चतुर्थे पदार्थलोपनं विचारितम्। अवत्तनाशे सत्याज्येन यजेत्। इडायर्थनाशे प्रति शेषान्न ग्राह्यमित्यादिकम्। पञ्चमे कालापराधेन चन्द्रोदये सत्यभ्युदयेष्टिः प्रायश्चित्तम्। ज्योतिष्टोमस्यैका-दयो दीक्षाः। द्वादशाहस्य द्वादश दीक्षा इत्यादि निरू-पितम्। षष्ठे सत्राधिकारिणस्तुल्य कल्पा एव। सत्त्रं विप्रस्यैवेत्येवमादिकं चिन्तितम्। सप्तमे पित्रादिकं न देयम्। महाभूमिर्न देयेत्येवमादिर्देयविचारः। अष्टमे लौकिकाग्नौ उपनयनहोमः। स्थपतीष्टिस्तथैवेत्येवमाद्यग्नि-विचारः कृतः।

प्रत्यक्षोक्त्यतिदेशोऽस्य शेषः साम निरूपणम्।
नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः॥ १४॥

सप्तमाध्यायस्य प्रथमे पादे समानमितरच्छ्येनेनेत्यादि-प्रत्यक्षवचनातिदेशः। द्वितीये रथन्तरशब्देन गान-मात्राभिधायिना गानस्यैवातिदेशत्वमित्येतादृशः पूर्वो-क्तातिदेशस्य शेषो विचारितः। तृतीयेऽग्निहोत्रनाम्नाति-देशः। चतुर्थे निर्वापौषधद्रव्यादिलिङ्गातिदेशः।

स्पष्टलिङ्गादथा स्पष्टात् प्रबलादपवादतः।

अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः ॥ १५ ॥

अष्टमाध्यायस्य प्रथमे पादे स्पष्टेन लिङ्गेनातिदेशविशेषः। तद् यथा। सौर्य्यचरावतिदेशकानि निर्वापस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादीनि स्पष्टान्याग्नेयलिङ्गानि। द्वितीये त्वस्पष्टैर्लिङ्गैरतिदेशः। तद् यथा। वाजिने हविः सामान्येन लिङ्गेन पयोविध्यन्तोऽतिदिश्यते। तत्र लिङ्गमस्पष्टम्। शीघ्रं तद्बुद्ध्यनुत्पादनात्। तृतीये प्रबलेन लिङ्गेनातिदेशः। तद् यथा। आभिचारिकेष्टावाग्नावैष्णवसारस्वतबार्हस्पत्येषु हविःषु त्रित्वेन लिङ्गेन यथाक्रममाग्नेयादिविध्यन्ते प्राप्ते द्विदेवत्यत्वेन लिङ्गेन प्रथम आग्नावैष्णवे तृतीयस्याग्नीषोमीयस्य विध्यन्तोऽतिदिष्टः। प्रबलञ्च द्विदेवत्यत्वम्। शब्दोच्चारणमात्रेण सहसा प्रतिभासात्। क्रमस्तु विलम्बितप्रतीत्या दुर्बलः। चतुर्थे दर्विहोमेष्वतिदेशोऽपोद्यते।

ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्त्तिताः ॥ १६ ॥

नवमाध्यायस्य प्रथमे पाद उपोद्घातपूर्वकमूहविचारप्रारम्भः। तत्र प्रयाजादयो धर्माः अपूर्वप्रयुक्ताः। अवघातमन्त्रादिष्वविवक्षितं व्रीह्यवनयादिस्वरूपं साधनविशेषत्वमात्रं विवक्षितमित्यादुपोद्घातः। सवितृश्रिपूषशब्दानां विकृतिषु नास्त्यूहः। अग्निशब्दस्यास्त्यूह इत्यादिक ऊहविचारारम्भः। द्वितीये सपरिकरः सामोहः। तृतीये मन्त्रोहः। चतुर्थे मन्त्रोहप्रसङ्गापतितो विचारः।

द्वारलोपोऽस्य विस्तारः कार्य्यैकत्वं समुच्चयः।
ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः॥ १७॥

दशमाध्यायस्य प्रथमे पादे बाधहेतुर्द्वारलोपो निरूपितः। तद् यथा। स्वयंकृता वेदिर्भवतीत्यत्र वेदिनिष्पादनरूपस्य द्वारस्य लोपेन निष्पादकानामुद्धननादीनां बाधः। कृष्णलेषु वितुषीकरणरूपस्य द्वारस्य लोपेनावघातस्य बाधः। द्वितीये संक्षेपेणोक्तस्य द्वारलोपस्य बहुभिरुदाहरणैर्विस्तारः। तृतीये बाधकारणं कार्य्यैकत्वम्। तद् यथा। प्रकृतौ गवाश्वादिदक्षिणाया ऋत्विक्परिक्रयः कार्य्यं। तथा विकृतिरूपे भूनाम्न्येकाहे धेनुरूपाया दक्षिणायास्तदेव कार्य्यम्। ततो धेन्वा गवाश्वादिदक्षिणा विकृतौ चोदकप्राप्ता बाध्यते। चतुर्थे नक्षत्रेष्टिविहिता उपहोमाश्चोदकप्राप्तैर्नारिष्टहोमैः सह समुच्चीयन्त इत्यादिः समुच्चयः। पञ्चमे षोड़शिग्रहः प्रकृतिगामी। स चाग्रयणपात्रादेव ग्रहीतव्य इत्यादिर्बाधप्रसङ्गागतो ग्रहादिविचारः। षष्ठे साम ऋचे गेयमित्यादिर्बाधप्रसङ्गागतः सामविचारः। सप्तमे पश्वङ्गेषु हविर्भेदः। स्विष्टकृदयमपूर्वकर्मेत्यादिर्बाधप्रसङ्गागतः प्रकीर्णविचारः। अष्टमे नानुयाजेष्विति पर्य्युदासो न सोम इत्यर्थवादो नातिरात्र इति प्रतिषेध इत्यादिर्बाधोपयुक्तो नञर्थविचारः।

उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः।
आवापविस्तृतिश्चैका दशाध्यायस्य पादगाः॥ १८॥

एकादशाध्यायस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः। द्वितीये तन्त्रावापौ संक्षेपेणोक्तौ। तृतीये तन्त्रमुदा-

हरणबाहुल्येन प्रपञ्चितम्। चतुर्थे तथैवावापः प्रपञ्चितः।

प्रसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने।

द्वादशाध्यायपादार्था इति पादार्थसंग्रहः ॥ १८ ॥

द्वादशाध्यायस्य प्रथमे पादे पशुधर्माणां पशुपुरोडाशे प्रसङ्गः। सौमिकवेदेरुत्तरकालीनकर्मसु प्रसङ्ग इत्यादिविचारः। द्वितीये सवनीयपशोस्तन्त्रित्वम्। नतु सवनीयपुरोडाशानाम्। विकृतिस्तन्त्रिणी न प्रकृतिः। अन्वारम्भणीया विकृतिष्वपि स्यात्। नतु प्रकृतावेवेत्यादिविचारः। तृतीये लग्वाससोः समुच्चयः। आधारगतानामृजुत्वमन्ततत्वादीनां समुच्चय इत्यादिकं प्राधान्येन। यवव्रीह्योर्विकल्प इत्यादिकं समुच्चयापवादत्वेनेत्युभयं चिन्तितम्। चतुर्थे चैन्द्राबार्हस्पत्ययाज्यानुवाक्ययुगलयोर्विकल्प इत्यादिकं प्राधान्येन। याज्यानुवाक्ययोः समुच्चय इत्यादिकं विकल्पापवादत्वेनेत्युभयं चिन्तितम्। तदेवं द्वादशाध्यायगतेषु षष्टिसंख्याकेषु पादेषु प्रतिपाद्या अर्थाः संगृहीताः। ननु यथोक्तेभ्यः पादार्थेभ्योऽन्येऽप्यर्था बहवस्तत्तत्पादेषु विचार्यन्ते। तेषां कथं तत्तत्पादान्तर्भाव इत्याशङ्क्याह।

उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः।

तत्तत्पादगतत्वेन विचारान्तरमुन्नयेत् ॥ २० ॥

यथोक्तपादप्रतिपाद्यादन्येष्वर्थेषु यथोचितं कश्चिदुपोद्घातः कश्चिदपवादः कश्चित् प्रसङ्गपतितः कश्चिदनुप्रसङ्गपतित इत्येवं पादान्तर्भाव उन्नेयः। ननु सन्त्वेवमध्या-

